अथ

# बंगलामुखी स्तोत्र

प्रारम्भ

॥ अथ ॥

# बगलामुखी स्तोत्रम् ।

प्रकाशक—

बाबू ठाकुरप्रसाद गुप्त,

कचौड़ीगली, बनारस सिटी ।

श्रीगणेशायनमः ॥ श्रुत्वाचबगला-
पूजांस्तोत्रंचापिमहेश्वर । इदानीं श्रोतुमि-
च्छामिकवचंवदमेप्रभो ॥ वैरिनाशकरं दि-
व्यंसर्वाऽशुभविनाशनम् । शुभदंस्मरणा-
त्पुण्यं त्राहिमांदुःखनाशनम् ॥ श्रीभैरवउ-
वाच ॥ कवचं शृणुवक्ष्यामिभैरविप्राणव-
ल्लभे ॥पठित्वाधारयित्वातुत्रैलोक्येविज-
यीभवेत् ॥ ॐअस्य श्रीबगलामुखीकवच-

स्य नारदऋषिरनुष्टुप्छन्दः श्रीबगलामु-
खीदेवतालंबीजऐंकीलकंपुरुषार्थचतुष्टये
जपेविनियोगः॥ शिरोमेबगलापातुहृदयै-
कान्तरीपराॐ ह्रींॐमेललाटेचबगलावैरि
नाशिनी। गदाहस्ता सदा पातु मुखं मे मो-
क्षदायिनी। वैरिजिह्वाधरापातु कण्ठंमेबग-
लामुखी॥ उदरंनाभिदेशंचपातुनित्यंपरा-
त्परा। परात्परतरापातुममगुह्यंसुरेश्वरी॥ह-

ब० स्तौचैवतथा।पातुपार्वतीपरिपातुमे । विवा- स्तो
देविषमेघोरे संग्रामेरिपुसंकटे। पीतांबरधरा
२ पातुसर्वांगंशिवनर्तकी। श्रीविद्यासमयापा-
तुमातंगीपूरिताशिवा।पातुपुत्रं सुतंचैवकल
त्रंकालिकामम ॥ पातुनित्यंभ्रातरंमेपितरं
शूलिनीसदा।रंध्रंहिबगलादेव्याःकवचं म- २
न्मुखोदितम् ॥ नैव देयममुख्याय सर्वसि-
द्धिप्रदायकम्। पठनाद्धारणादस्यपूजनाद्वां

छितंलभेत्। इदंकवचमज्ञात्वायोजपेद्ब-
गलामुखीम् । पिबंतिशोणितंतस्ययोगि-
न्यःप्राप्यसादराः।वश्येचाकर्षणेचैवमारणे
मोहनेतथा।महाभयेविपत्तौचपठेद्वापाठये
त्तुयःतस्यसर्व्वार्थसिद्धिःस्याद्भक्तियुक्तस्य
पार्वति॥ इति श्रीरुद्रयामलेबगलामुखीक-
वचं संपूर्णम्॥श्रीगणेशायनमः॥श्रीबगला
मुखीदेव्यैनमः॥ॐ अस्य श्रीबगलामुखी-

स्तोत्रस्य भगवान्नारदऋषिः बगलामुखी देवता मम सन्निहितानां दुष्टानां विरोधिनां वाङ्मुखपदजिह्वाबुद्धीनांस्तम्भनार्थे श्रीबगलामुखीवरप्रसादसिद्ध्यर्थे जपेविनियोगः ओं ह्रींअंगुष्ठाभ्यांनमः ओं बगलामुखीतर्जनीभ्यांनमः। ओंसर्वदुष्टानांमध्यमाभ्यां वषट्॥ ओंवाचंमुखंपदंस्तम्भयअनामिकाभ्यांहुम्। ओं जिह्वांकीलयकीलय कनि-

ष्ठिकाभ्यांवौषट्। बुद्धिंनाशय ओं ह्लींस्वाहा
करतलकरपृष्ठाभ्यांफट्॥ एवंहृदयादिषु॥
अथध्यानम्॥सौवर्णासनसंस्थितां त्रिनय-
नां पीतांशुकोल्लासिनीं हेमाभांगरुचिंश-
शांकमुकुटांस्रक्चम्पकस्रग्युताम्।हस्तैर्मु-
द्गरपाशबद्धरसनांसंबिभ्रतीं भूषणैर्व्याप्तां
गीं बगलामुखीं त्रिजगतां संस्तंभिनीं चि-
न्तये १ अथमंत्रः॥ ओंह्लींबगलामुखिसर्वदु-

ब० ष्टानांवाचंमुखंपदंस्तंभयजिह्वांकीलय की- स्तो
लय बुद्धिंनाशय२ह्लीं ओं स्वाहा॥स्तोत्रम्।
४ ॐमध्येसुधाब्धिमणिमण्डपरत्नवेदीसिं-
हासनोपरिगतां परिपीतवर्णाम्॥ पीताम्ब-
राभरणमाल्यविभूषितांगीं देवीं भजामि
धृतमुद्गरवैरिजिह्वाम् १ जिह्वाग्रमादायकरे ४
णदेवींवामेनशत्रून्परिपीडयन्तीम्॥गदा-
भिघातेनच दक्षिणेन पीताम्बराढ्यांद्विभु-

जांनमामि २ॐ चलत्कनककुण्डलोल्ल-
सितचारुगण्डस्थलींलसत्कनकचम्पकद्यु
तिमदिन्दुबिम्बाननाम्॥ गदाहतविपक्षकां
कलितलोलजिह्वाञ्चलां स्मरामिबगला
मुखीं विमुखवाङ्मनःस्तम्भिनीम् ३पीयूषो
दधिमध्यचारुविलसद्रक्तोत्पलेमण्डपे त-
त्सिंहासनमौलिपातितरिपुंप्रेतासनाध्यासि
नीम्॥स्वर्णाभांकरपीडितारिरसनां भ्राम्य-

द्गदांविभ्रमामित्थंध्यायातियांतितस्यावि-
ब० लयंसद्योऽथसर्वापदः।४।देवित्वच्चरणाम्बु- स्तो
जार्चनकृतेयःपीतपुष्पांजलीन्भक्त्यावा-
५ मकरेनिधायचपुनर्मन्त्रंमनोज्ञाक्षरम्।पी-
ठध्यानपरोऽथ कुंभकवशाद्बीजंस्मरेत्पा-
र्थिवस्तस्यामित्रमुखस्यवाचिहृदये जा-
ड्यं भवेत्तत्क्षणात् ।५। वादीमूकति रंकति ५
क्षितिपतिर्वैश्वानरंशीतति क्रोधी शाम्यति

दुर्ज्जनः सुजनातिक्षिप्रानुगः खंजति॥ प्रांशुः
खर्वति सर्वविच्च जडतितत्वद्यंत्रणायंत्रितः॥
श्रीनित्ये बगलामुखि प्रतिदिनं कल्याणि
तुभ्यंनमः॥६॥ मंत्रस्यात्मबलं विपक्षदल-
नं स्तोत्रं पवित्रं च ते॥ तन्त्रंवादिनियन्त्रणं
त्रिजगतां जैत्रंचचित्रंच ते। मातःश्रीबगले-
तिनामललितं यस्यास्तिजन्तोर्मुखेत्वन्ना-
मग्रहणेन संसदि मुखस्तम्भो भवेद्वादिना

म ७ दुष्टस्तम्भनमुग्रविघ्नशमनंदारिद्र्यवि-
द्राविणींभूभृद्भीशमनं चलन्मृगदृशांचेतः
समाकर्षणम् सौभाग्यैकनिकेतनंयमदृशः
कारुण्यपूर्णामृतं मृत्योर्मारणमाविरस्तु
पुरतोमातस्त्वदीयंवपुः८मातर्भंजयमे वि-
पक्षवदनंजिह्वांचसंकीलयब्राह्मींमुद्रयना-
शयाशुधिषणामुग्रांगतिंस्तंभय।शत्रूँश्चू-
र्णयदेवितीक्ष्णगदयागौरांगिपीताम्बरे वि-

घ्नौघंबगलेहरप्रणामतां कारुण्यपूर्णेक्षणो
।९। मातर्भैरविभद्रकालिविजयेवाराहिवि-
श्वाश्रये श्रीविद्येसमयेमहेशिबगलेकामा-
क्षिवामेरमे ॥मातंगित्रिपुरेपरात्परतरेस्वर्गा
पवर्गप्रदे दासोऽहंशरणागतः करुणयावि-
श्वेश्वरित्राहिमाम् १० संरम्भेचौरसंघेप्रहरण
समयेबंधनेवारिमध्येविद्यावादेविवादे प्र-
कुपितनृपतौ दिव्यकाले निशायाम्। वश्ये

वास्तम्भनेवारिपुवधसमये निर्जनेवावनेवा
गच्छंस्तिष्ठंस्त्रिकाले यदिपठतिशिवंप्राप्नु
याद्राशुधीरः।११।नित्यंस्तोत्रमिदं पवित्र-
मिहयोदेव्याः पठत्यादराद्धृत्वायन्त्रमिदं
तथैवसमरेबाहौकरेवागले। राजानोऽप्यर-
योमदान्धकरिणः सर्पामृगेन्द्रादिकास्ते वै
यान्तिविमोहिता रिपुगणा लक्ष्मीः स्थिरा
सिद्धयः१२त्वंविद्या परमा त्रिलोकजननी

विघ्नौघसञ्छेदिनी कोषाकर्षणकारिणी
त्रिजगतामानन्दसंवर्द्धिनी। दुष्टोच्चाटनका-
रिणी जनमनः संमोहसंदायिनी जिह्वाकी-
लयभैरवी विजयते ब्रह्मादिमंत्रोयथा। १३।
विद्यालक्ष्मीःसर्वसौभाग्यमायुः पुत्रैः पौत्रैः
सर्वसाम्राज्यसिद्धिःमानं भोगो वश्यमारो-
ग्यसौख्यं प्राप्तेतत्तद्भूतलेऽस्मिन्नरेण। १४।
यत्कृतंजपसन्नाहं गदितं परमेश्वरि। दुष्टानां

निगृहार्थायतद्गृहाणनमोऽस्तुते ।१५।ब्र-
ह्मास्त्रमितिविख्यातं त्रिषु लोकेषुविश्रुतम्।
गुरु भक्ताय दातव्यं नदेयंयस्यकस्यचित्।
पीताम्बरां द्विभुजां त्रिनेत्रां गात्रकोज्ज्व-
लाम्॥शिलामुद्गरहस्तां च स्मरेत्तां बग-
लामुखीम् ॥

॥ इति श्रीरुद्रयामले बगलामुखीस्तोत्रं समाप्तम् ॥

मुद्रक—बाबू ठाकुरप्रसाद गुप्त, बम्बई प्रेस, राजादर्वाजा, बनारस सिटी ।